कण्ठसंयोगादिजन्या वर्णास्ते कादयो मताः ॥ सर्वः शब्दो नभोवृत्तिः श्रोत्रोत्पन्नस्तु गृह्यत इति । नभोवृत्तिराकाशसमेतः । दूरस्थशब्दस्याग्रहणादाह । श्रोत्रेति । ननु मृदंगाद्यवच्छेदेनोत्पन्ने शब्दे श्रोत्रे कथमुत्पत्तिरत आह । विचीतरंगन्यायेन तदुत्पत्तिस्तु कीर्तितेति । आद्यशब्दस्य बहिर्देशदिगवच्छिन्नोऽन्यः शब्दस्तेनैव शब्देन जन्यते । तेन चापरस्तद्व्यापकः । एवं क्रमेण श्रोत्रोत्पन्नो गृह्यत इति ॥ १६४ ॥ १६५ ॥

**कदम्बकोरकन्यायादुत्पत्तिः कस्यचिन्मते ।**
**उत्पन्नः को विनष्टः क इति बुद्धेरनित्यता ॥ १६६ ॥**

कदम्बकोरकन्यायादुत्पत्तिः कस्यचिन्मत इति । आद्यशब्दाद् दशदिक्षु दशशब्दा उत्पद्यन्ते । ततश्चान्ये दश शब्दा उत्पद्यन्त इति भावः । अस्मिन् कल्पे गौरवादुक्तं कस्यचिन्मते इति । ननु शब्दस्य नित्यत्वादुत्पत्तिः कथमत आह । उत्पन्नः को विनष्टः क इति बुद्धेरनित्यतेति । शब्दानामुत्पादविनाशप्रत्ययशालित्वादनित्यत्वमित्यर्थः ॥ १६६ ॥

**सोऽयं क इति बुद्धेस्तु साजात्यमवलम्बते ।**
**तदेवौषधमित्यादौ सजातीयेऽपि दर्शनात् ॥ १६७ ॥**

ननु स एवायं ककार इत्यादिप्रत्यभिज्ञानाच्छब्दानां नित्यत्वम् । इत्थं चोत्पादविनाशबुद्धिभ्रमरूपा चेत्यत आह । सोऽयं क इति बुद्धिस्तु साजात्यमवलम्बते । तदेवौषधमित्यादौ सजातीयेऽपि दर्शनादिति । तत्र प्रत्यभिज्ञानस्य तत्सजातीयत्वं विषयो न तु तद्व्यक्त्यभेदो विषयः । उक्तप्रतीतिविरोधात् । इत्थं च द्वयोरपि बुद्ध्योर्न भ्रमत्वमिति । ननु सजातीयत्वं सोऽयमिति प्रत्यभिज्ञायां भासते इति कुत्र दृष्टमित्यत आह । तदेवेति । यदौषधं मया कृतं तदेवान्येनापि कृतमित्यादिदर्शनादिति भावः ॥ १६७ ॥

**इति श्रीमहामहोपाध्यायविद्यानिवासभट्टाचार्यसुतश्रीविश्वनाथपञ्चाननभट्टाचार्यविरचितः सिद्धान्तमुक्तावलीसमेतो भाषापरिच्छेदः समाप्तः ।**

# सूचीपत्र.

| पुस्तकोंका नाम. | किंमत. |
|---|---|
| दशउपनिषद् मूळ .. .. ... ... | ३ |
| शारीरक ( शांकरभाष्य ) रत्नप्रभाटीकाटिप्पणसहित अक्षरवडा एकपाद तयार है अगाऊ किं०... | ९ |
| सांबपुराण .. .. ... ... | २ |
| गर्गसंहिता नवी शुद्ध छपेली ... ... | ४ |
| जैमिनीकृतअश्वमेध .. .. .. | २ |
| मूळरामायणभाषा टीका .. .. .. | ।· |
| रामाश्वमेध अक्षरवडा है .. .. ... | २॥ |
| भवानीसहस्रनाम .. ... ... | ।~ |
| बृहत्पाराशरस्मृति टाईपकी .. .. ... | १॥ |
| व्रतराज अतिउत्तमटिप्पणसहित .. ... | ५ |
| भवाब्धिसेतु भाषाटीकासहित .. ... | १ |
| पूजापंकजभास्कर .. .. ... | २ |
| सर्वदेवप्रतिष्ठासंग्रह ... .. ... | ४॥ |
| सिद्धांतकौमुदी अक्षरमोटा जि० .. .. | ५ |
| लघुकौमुदी टिप्पणसहितजिल्द अक्षर वडा .. | १ |
| सिद्धांतचंद्रिका सटीक .. ... .. | ४ |
| न्यायप्रकाशभाषा .. .. | ७ |
| चिकित्साक्रमकल्पवल्ली .. ... ... | ३॥ |
| चिकित्साधातुसार भाषा .. .. | ।= |
| लोलिंबराज संस्कृतटीका और भाषाटीका छपता है .. | १॥ |
| तुलसीदासकृतरामायण वडे अक्षरका क्षेपकसमेत | ६ |
| प्रेमसागर टाईपका .. .. ... | १। |
| भक्तमाला वा हरिभक्तिप्रकाशिका .. .. | ४ |
| विद्याग्यानप्रकाश,वालकोंकेहितउपयोगी .. .. | ।॥= |